# अद्वैतामोदः नाम ग्रन्थे वासुदेवशास्त्रि-अभयंकरः

प्रदर्शितमेतच्छ्रीमच्छंकराचार्याणां रामानुजाचार्याणां च दर्शनम् । अधुनात्रयमुख्यसिद्धान्तावबोधसौलभ्यायैतद्दर्शनद्वयं सक्षेपेणो च्यते

| | | |
|---|---|---|
| १ | आत्मरूपमेकमेव तत्त्वं नान्यत्किंचित् । | चिदचिद्रूपशरीरविशिष्ट आत्मैक एव न तु तस्मात्तच्छरीराद्यान्यत्किंचित् । |
| २ | आत्मनोऽन्यत्किंचिदपि न सत्यमात्मसजातीयमात्मविजातीयमात्मनिष्ठं वा । स्वगतसजातीयविजातीयभेदत्रयशून्य एवात्मा । | आत्मा चेतनत्वेन स्वसजातीयेभ्यो जीवेभ्योऽचेतनत्वेन विजातीयेभ्यो जडेभ्यः प्रधानादिभ्यः स्वगतेभ्यः कल्याणकारक गुणेभ्यश्च भिन्नः । |
| ३ | स चात्मा निर्विशेषः । ईदृशस्तादृश इत्येवं केनापि प्रकारेण वक्तुं न शक्यते । | स चात्मा सविशेषः । सर्वज्ञत्वनित्यत्वव्यापित्वादिविशेषयुक्तः सर्वज्ञो नित्यो व्यापीत्यादिशब्दैर्वक्तुं शक्यते । |
| ४ | अत एव च स निर्गुणः । न तत्र कल्याणकारका अपि गुणा वस्तुतः सन्ति । | आत्मा स्वभावत एवापहतपाप्मत्वाद्यनेककल्याणकारकगुणगणाश्रयः । न तत्र हेयगुणाः सन्ति । |
| ५ | ज्ञानरूपोऽपि गुणो न तत्र वर्तते । स्वयमेव स ज्ञानस्वरूपः । | ज्ञानस्वरूपोऽपि स ज्ञानगुणाश्रयः । गुणभूतज्ञानं च स्वरूपभूतज्ञानाद्भिन्नमेव । |
| ६ | अत एव न तत्र वस्तुतो ज्ञातृत्वम् विज्ञातृत्वोक्तिस्त्वौपचारिकी । | अतस्तस्य वस्तुत एवं ज्ञातृत्वम् । अत एव च स विज्ञातेति व्यवह्रियते । |
| ७ | ज्ञेयत्वमपि तस्य नास्ति । स्वस्मिन्स्वाश्रयत्वस्य स्वविषयत्वस्य चासंभवात् । | ज्ञेयत्वमपि तस्यास्त्येव । गुणभूतज्ञानस्यात्मनः सकाशाद्भिन्नत्वेन तदाश्रयत्वस्य तद्विषयत्वस्य चात्मनि संभवात् । |

| | | |
|---|---|---|
| ८ | परमात्मा स्वेन रूपेण कूटस्थनित्यः । तेनैव रूपेणाद्वितीयश्च । | परमात्मा स्वेन रूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः । विशिष्टरूपेणैवाद्वितीयः । |
| ९ | अत एव ब्रह्माद्वैतमित्युच्यते । | ब्रह्माद्वैतं तु न प्रकाराद्वैतम् । किं तु प्रकार्यद्वैतम् । ब्रह्मप्रकारीभूतानां जीवानां जडानां चानेकत्वेऽपि प्रकारिणो ब्रह्मण एकत्वात् । |
| १० | परमात्मनः सन्मात्ररूपत्वात्तदभिन्नं ज्ञानमपि सद्रूपमेव नतु सद्विषयकम् । | तच्च गुणभूतं ज्ञानं न सन्मात्ररूपं किं तु सद्विषयकम् । |
| ११ | परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं च जीवत्वम् । जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वम् । | परमात्मैवेश्वरः । तच्छरीरभूतो । जीववर्गो जडवर्गश्च ततो भिन्न एवेति । चिदचिदीश्वररूपं तत्त्वत्रयम् । |
| १२ | परमात्मनः सकाशादभिन्नापि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या । तदुपहितः परमात्मा जगतो मूलप्रकृतिः । | परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः । |
| १३ | अज्ञानेन परमात्मन्येवेदं जगद्भासते । अयं विवर्तवादः । | प्रधानमेवान्तर्यामीश्वरसांनिध्याजगदाकारेण परिणमते । अयं परिणाम- वादः । |
| १४ | परमात्मन्विवर्तभूतं प्रातिभासिकं चेदं जगन्मिथ्यैव न तु सत्यम् । | प्रधानपरिणामभूतं चेदं जगत्सत्य- मेव न तु मिथ्या । |
| १५ | अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इत्यनिर्वचनीयख्यातिः। | वस्तुतः सत्यमेत्र जगत्प्रतीयत इति सर्वत्र सत्ख्यातिः । |

| | | |
|---|---|---|
| १६ | शुक्तिरजतस्थले स्वप्नादौ चानिर्वचनीया एवार्थाः प्रतिभासन्ते । | शुक्तिरजतस्थले स्वमादौ च सत्या । एवार्थाः प्रतीयन्ते |
| १७ | शास्त्रमपि जगदन्तर्गतत्वादसत्यमेव । तथापि तत्तत्त्वज्ञानसाधनं भवत्येव स्वाप्नपदार्थवत् । | शास्त्रस्य सत्यत्वादेव तस्य तत्त्वज्ञानसाधनत्वम् । असत्यात्सत्योत्पत्तेरसंभवात् । |
| १८ | अर्थज्ञानसाधनीभूतानि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपाणि षट्। | अर्थज्ञानसाधनीभूतानि प्रमाणानि - प्रत्यक्षानुमानशब्दरूपाणि त्रीणि । |
| १९ | प्रमाणैश्च यज्ज्ञानं जायते तत्रान्तःकरणं ज्ञानाभिव्यञ्जकं भवति । | प्रमाणैर्जायमानं ज्ञानं च वस्तुत एव जीवनिष्टम् । |
| २० | परमात्मनः सकाशादभिन्नानां जीवानामपि परमात्मदेव ज्ञानस्वरूपत्वं न तु वस्तुतोज्ञानाश्रयत्वम् किंत्वन्तःकरणोपाधिकं ज्ञातृत्वम् । | परमात्मनः सकाशाद्भिन्नाः परमात्मशरीरभूता जीवा अपि ज्ञानस्वरूपा तम् । ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् । |
| २१ | ज्ञानाश्रयत्वेन भासमानोऽहमर्थो न । जीवात्मा । किंत्वन्तः करणविशेषोऽहंकारः । | ज्ञानाश्रयश्चाहमर्थो जीव एव न तु तदतिरिक्तोऽहंकारो ज्ञानाश्रयः । |
| २२ | जीवो विभुः । | जीवोऽणुः । |
| २३ | स्वरूपत एव तस्य सर्वशरीरावयवेषु व्याप्तिः । | ज्ञानद्वारा च तस्य सर्वशरीरावयवेषु व्याप्तिः । |
| २४ | जीवश्च ब्रह्मस्वरूप एवेत्येक एव । जीवानेकत्वं त्वौपाधिकम् । | जीवा वस्तुत एव नानाविधाः । ।जीवाद्वैतं तु प्रकाराद्वैतम् । |
| २५ | साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मविचारारम्भः । | कर्मस्वरूपज्ञानानन्तरं ब्रह्मविचारारम्भः । |

| | | |
|---|---|---|
| २६ | प्रत्यक्षसामग्रीसंनिधाने शब्दोऽपि प्रत्यक्षज्ञानं जनयति । | शब्दाज्ज्ञायमानं ज्ञानं परोक्षमेव न तु कदाचिदपि प्रत्यक्षम् । |
| २७ | महावाक्यादिभिरात्मस्वरूपसाक्षात्कारे सद्य एवाविद्यानिवृत्तिः । | महावाक्यादिजन्योपासनादार्ढ्येन परमात्मा प्रसन्नो भवति । |
| २८ | सुखदुःखातीतात्मसाक्षात्कारे लौकिकशरीरसत्त्वेऽपि जीवत एव मुक्तिः। | तथापि लौकिकशरीरसत्त्वे सुखदुःखानुभवावश्यकत्वान्न कदापि जीवतो मुक्तिः । |
| २९ | प्रारब्धकर्मक्षये शरीरत्यागे सति। स्वस्वरूपेणावस्थितिर्भवति । | प्रारब्धकर्मक्षये लौकिकशरीरत्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवति । |
| ३० | इयं विदेहमुक्तिः | इयमेव मुक्तिः । |
| ३१ | मुक्तावहंभावो नास्ति । | मुक्तावप्यहंभावोऽस्त्यैव । |
| ३२ | मुक्तौ जीवब्रह्मणोर्भेदो नास्ति। | मुक्तावपि जीवब्रह्मणोर्भेदोऽस्त्येव । |
| ३३ | अस्यामवस्थायां न लेशतोऽपि दुःखं नापि सुखं भवति । | अस्यामवस्थायां दुःखलेशेनाप्यसंभिन्नं सुखाधिक्यमनुभूयते । |